## विनीत प्रार्थना।

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा।

दोहा—सुनो भक्तजन! बीनती, कहता मैं करजोर।
भेंट करूं मैं आपको, यह पुस्तक-सिर-मोर॥
पाठ करो नित नेमसे, जुगल रूप उर ध्यान।
निश्चय करके दृढ़ रहो, दरशन दें भगवान॥

## श्रीवृन्दावन महिमा।

दोहा—धन वृन्दावन गांव कह, धन वृन्दावन धाम।
धन वृन्दावन के रसिक, धन श्रीराधेश्याम॥
वृन्दावन में वास करि, साक पात नित खात।
तिनके भागन कों निरखि, ब्रह्मादिक ललचात॥
हम न भये ब्रजमें-प्रगट, यही रही मन आस।
नित प्रति निरखैं युगल छवि, कर वृन्दावन वास॥
जो इन कों नित प्रति पढ़ै, सब विधि सदा अनंद।
कृपा करें तापै सदा, मोहन यदुकुलचंद॥
जा देही में प्रगट हो, कृष्ण नाम सों नेह।
निश्चय करि के जानिये, ब्रजरज सों वह देह॥

(सोरठा)

हरि पद प्रीति न होय, बिन हरि गुण गाये सुने।
भवतैं छुटत न कोय, बिना प्रीति हरिपद भये॥

पूज्य हरिभक्तों का दासानुदास—
चौथमल अग्रवाल जयपुर.

॥ श्रीगणेशाय नमः ॥

# श्रीराधा-माधवस्तवसंग्रहः ।

मङ्गलाचरणम् ।

श्रीराधयाऽलङ्कृतवामबाहु-
स्वच्छन्दवक्रीकृतदक्षिणाङ्घ्रिम् ।
वंशीधरं सुन्दर-मन्दहासं
भ्रूमण्डलामोहितकामराशिम् ॥

श्रीमद्वृन्दावनं ध्यायेद् वैष्णवो हृदये सदा ।
महापद्मं योगपीठं काञ्चनस्थलनिर्मलम् ॥ १ ॥
पूर्णचन्द्रोदयं नित्यं सर्वत्र कुसुमान्वितम् ।
कदम्बपादपच्छायं कालिन्दीपुलिनोत्तमम् ॥ २ ॥
माधवीकुञ्जविभ्रामभ्रमद्भ्रमरविभ्रमम् ।
कोकिलध्वनिसंघोषं मयूरोद्दामनर्तनम् ॥ ३ ॥
कृष्णसारसमाकीर्णं कामधेनुसुखास्पदम् ।
गोपगोपीप्रियस्थानं कल्पपादपशोभितम् ॥ ४ ॥
मध्ये गोवर्धनं तत्र विचित्रमणिमन्दिरम् ।
रत्नसिंहासनासक्तं पद्मरागसरोरुहम् ॥ ५ ॥
तन्मध्ये चिन्तयेत् कृष्णं किशोरं नन्दनन्दनम् ।
वामेतस्यप्रियांराधां किशोरींवृषभानवीम् ॥ ६ ॥

स्वभावतोऽपास्तसमस्तदोष-
मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्मपरं वरेण्यं
ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥ ७ ॥
अङ्गे तु वामे वृषभानुजां मुदा
विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा
स्मरेम देवीं सकलेष्टकामदाम् ॥ ८ ॥
सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ॥
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥ ९ ॥
गोपीगोपगणावीतं सुरद्रुमलताश्रयम् ॥
दिव्यालंकरणोपेतं रत्नपङ्कजमध्यगम् ॥ १० ॥
कालिन्दीजलकल्लोलसंगिमारुतसेवितम् ।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥ ११ ॥

---

## अथ श्रीकृष्णकृपाकटाक्षस्तोत्रम् ।

भजे व्रजैकमण्डनं समस्तपापखण्डनं
सुभक्तचित्तरंजनं सदैव नन्दनन्दनम् ॥
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं ।

अनङ्गरंगसागरं नमामि कृष्णनागरम् ॥ १
मनोजगर्वमोचनं विशालभालचन्दनं ।
सुपीतवस्त्रशोभनं नमामि पद्मलोचनम् ॥
करारविन्दभूषणं स्मितावलोकसुन्दरं ।
महेन्द्रमानदारणं स्मरामि कृष्णवारणम् ॥ २
कदम्बसूनकुंडलं सुचारुगंडमंडलं ।
व्रजांगनैकवल्लभं नमामि कृष्णदुर्लभम् ॥
यशोदया समोदया सकोपया दयानिधिं ।
उलूखले सुदुस्सहं नमामि नन्दनन्दनम् ॥ ३
नवीनगोपनागरं नवीनकेलिसागरं ।
नवीनमेघसुन्दरं भजे व्रजैकमन्दिरम् ॥
सदैव पादपङ्कजं मदीयमानसे निजं ।
दधामि नन्दबालकं समस्तभक्तपालकम् ॥ ४
समस्तगोपनागरं हृगम्बुजैकमोहनं ।
नमामि कुंजनायकं प्रसूनभानुशोभनम् ॥
हृगन्तकान्तिरंजनं सदा सदालिसंगिनं ।
दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥ ५
गुणाकरं सुखाकरं कृपाकरं सुभक्तिदं ।
सुरासुरासुदायकं नमामि गोपनायकम् ॥
समस्तदोषशोषणं समस्तलोभशोषणं ।

समस्तदासमानसं नमामि कृष्णलालसम् ॥ ६ ॥
समस्तगोपनायकं निकामकामदायकं ।
दृगन्तचारुसायकं नमामि कृष्णनायकम् ॥
भयभवाब्धितारकं भवाब्धिकर्णधारकं ।
यशोमतेः किशोरकं नमामि दुग्धचोरकम् ॥ ७ ॥
विदग्धमुग्धगोपिकामनोजकामदायकं ।
नमामि दुग्धकानने प्रवृद्धवह्निपावके ॥
यदा यदा यथा तथा तथैव कृष्णसत्कथा ।
मया सदैवगीयतां तथा कृपा विधीयतां ॥ ८ ॥
प्रमाणमष्टकद्वयं पठन्ति प्रातरुत्थिताः ।
सदैव नन्दनन्दनं सुभक्तभावसंस्थितम् ॥ ९ ॥

इति श्रीकृष्णकृपाकटाक्षस्तोत्रं सम्पूर्णम् ।

---

## * श्रीराधाकृपाकटाक्षस्तोत्रम् *

मुनीन्द्रवृन्दवन्दिते त्रिलोकशोकहारिणि ।
प्रसन्नवक्त्रपङ्कजे निकुञ्जभूविलासिनि ॥
व्रजेन्द्रभानुनन्दिनि व्रजेन्द्रसूनुसङ्गते ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ १
अशोकवृक्षवल्लरीवितानमंडपस्थिते ।
प्रवालजालपल्लवप्रभारुणाङ्घ्रिकोमले ॥

वराभयस्फुरत्करे प्रभूतसम्पदालये ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ २
अनङ्गरङ्गमङ्गलप्रसङ्गभंगुरभ्रुवा ।
सविभ्रमं ससम्भ्रमं दृगन्तबाणपातनैः ॥
निरन्तरं वशीकृतप्रतीतनन्दनन्दने ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ३
तडित्सुवर्णचंपकप्रदीप्तगौरविग्रहे ।
मुखप्रभापरास्तकोटिशारदेन्दुमंडले ॥
विचित्रचित्रसंचरच्चकोरशावलोचने ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ४
मदोन्मदातियौवने प्रमोदमानमंडिते ।
प्रियानुरागरंजिते कलाविलासपंडिते ॥
अनन्यधन्यकुंजराजकामकेलिकोविदे ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ५
विशेषहावभावधीरहीरहारभूषिते ।
प्रभूतशातकुम्भकुम्भकुम्भिकुम्भसुस्तनि ।
प्रशस्तमन्दहासचूर्णपूर्णसौख्यसागरे ।
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ६
मृणालबालवल्लरीतरंगरंगदोर्लते ।
लताग्रलास्यलोलनीललोचनावलोकने ।
ललल्लुलन्मिलन्मनोज्ञमुग्धमोहनाकृते ।

कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ७

सुवर्णमालिकांचितत्रिरेखकंबुकण्ठगे
त्रिसूत्रमंगुलीगुणत्रिरत्नदीप्तिदीधिते ।
सलोलनीलकुन्तले प्रसूनगुच्छगुम्फिते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ८

नितंबबिम्बलंबमानपुष्पमेखलागुण-
प्रसक्तरक्तकिंकिणीकलापमध्यमंजुले ।
करीन्द्रशुण्डदण्डकावरोहसौभगोरुके
कदा करिष्यसीह मां कृपकटाक्षभाजनम् ॥ ९

अनेकमांत्रनादमंजुनूपुरारवस्खलत्
समाजराजहंसवंशनिक्कणातिगौरवे ।
विलोलहेमवल्लरीविडम्बिचारुचंक्रमे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ १०

अनन्तकोटिविष्णुलोकनम्रपद्मजार्चिते
हिमाद्रिजे पुलोमजे विरंचिजे वरप्रदे ।
अपारसिद्धिवृद्धिदिग्धसत्पदांगुलीनखे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ११

मखेश्वरी क्रियेश्वरी स्वधेश्वरी सुरेश्वरी
त्रिवेदभारतीश्वरी प्रमाणशासनेश्वरी ।
रमेश्वरी क्षमेश्वरी प्रमोदकाननेश्वरी
व्रजेश्वरी व्रजाधिपे श्रीराधिके नमोस्तु ते ॥ १२

इतीदमद्भुतस्तवन्निशम्य भानुनन्दनी
करोति संततं जनं कृपाकटाक्षभाजनम् ।
भवेत्सदैव सन्ततं त्रिरूपकर्मनाशनं
लभेत्तथा व्रजेन्द्रसूनुमंडलप्रवेशनम् १३॥
राकायां च सिताष्टम्यां दशम्यां च विशुद्धया ।
एकादश्यां त्रयोदश्यां यः पठेत्साधकः स्वयम् १४
यं यं कामयते कामं तं तं प्राप्नोति साधकः ।
राधाकृपाकटाक्षेण भक्त्यंते मे क्षमाप्नुयात् १५
ऊरुमात्रे नाभिमात्रे हृन्मात्रे कण्ठमात्रके ।
राधाकुण्डजले स्थित्वा यः पठेत्साधकः स्वयम् १६
तस्य सर्वार्थसिद्धिः स्यात् वांछितार्थफलं भवेत्
ऐश्वर्यं च लभेत् साक्षात् दृशा पश्यति राधिकाम्
तेन साक्षात्क्षणादेव तुष्टा दत्ते महावरम् ।
येन पश्यन्ति नेत्राभ्यां तत्प्रियं श्यामसुन्दरम् १८
नित्यलीलाप्रवेशं च ददाति श्रीव्रजाधिपा ।
अतः परतरं प्रार्थ्यं वैष्णवस्य न विद्यते ॥ १९
श्यामां गोरोचनाभां स्फुरदसितपटप्राप्तिरम्यावगुंठां
रम्यां वेणीचिकुरनिकरालम्बपादां किशोरीम्
तर्जन्यंगुष्ठयुक्तां हरिमुखकुहरे यंजतीं नागवल्ली-
पर्णं कर्णायताक्षीं त्रिभुवनमधुरां राधिकां भावयामि १

इति श्री ऊर्द्ध्वाम्नायतन्त्रे पार्वतीहरसम्वादे श्रीराधा-
कृपाकटाक्षस्तोत्रं सम्पूर्णम् ।

# * श्रीगोपीजनवल्लभस्तवम् *

नवाम्बुदानीलमनोहराय प्रफुल्लराजीवविलोचनाय ।
वेणुस्वनामोदित गोकुलाय । नमोऽस्तु गोपीजनवल्लभाय १
किरीटकेयूरविभूषिताय ग्रैवेयमालामणिरंजिताय ।
स्फुरच्चलत्कांचनकुण्डलाय । नमोऽस्तु गोपी० ॥ २ ॥
दिव्याङ्गनावृन्दनिषेविताय स्मितप्रभाचारुमुखाम्बुजाय
त्रैलोक्यसंमोहनसुन्दराय । नमोऽस्तु गोपी० ॥ ३ ॥
रत्नाद्रिमूलायतसंगताय कल्पद्रुमच्छायसमाश्रिताय ।
हेमस्फुरन्मण्डपमध्यगाय । नमोऽस्तु गोपी० ॥ ४ ॥
श्रीमत्सुरोमावलिरंजिताय वक्षःस्थले कौस्तुभभूषणाय ।
सरोजकिंजल्कनिभांशुकाय । नमोऽस्तु गोपी० ॥ ५ ॥
दिव्यांगुलीयांगुलिरंजिताय मयूरपिच्छच्छविभूषिताय
वन्यस्रजालंकृतविग्रहाय । नमोऽस्तु गोपी० ॥ ६ ॥
मुनीन्द्रवृन्दैरभिसंस्तुताय स्मरत्पयोगोकुलगोकुलाय ।
धर्मार्थकामामृतसाधनाय । नमोऽस्तु गोपी० ॥ ७ ॥
नेत्रस्फुरत्सोमदिवाकराय भक्तेष्टचिन्तामणिशोभिताय
अनेकदुःखामयभेषजाय । नमोऽस्तु गोपी० ॥ ८ ॥

ध्यानम् ।

सजलजलदनीलं दर्शितोदारशीलं
करतलधृतशैलं वेणुवाद्ये रसालम् ।
व्रजजनकुलपालं कामिनीकेलिलोलं
तरुणतुलसिमालं नौमि गोपालबालम् ॥ ९

नारद उवाच ।

नवीननीरदश्यामं नीलेंदीवरलोचनम् ।
वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥ १
स्फुरद्बर्हिदलोद्बद्धनीलकुंचितमूर्धजम् ।
कदम्बकुसुमोद्भासिवनमालाविभूषितम् ॥ २
गंडमण्डलसंसर्गिचलत्कांचनकुण्डलम् ।
स्थूलमुक्ताफलोदारहारशोभितवक्षसम् ॥ ३
हेमांगदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ।
मन्दमारुतसंक्षोभिवलितांबरसंचयम् ॥ ४
रुचिरास्यपदन्यस्तवंशीमधुरनिस्वनैः ।
लसद्गोपालिकाचेतो मोहयन्तम्मुहुर्मुहुः ॥ ५
वल्लवीवदनांभोजमधुपानां मधुव्रतम् ।
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥ ६
यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ।
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ७
प्रभिन्नांजनकालिंदीजलकेलिकलोत्सुकम् ।
बोधयन्तं क्वचिद्गोपान् व्याहरन्तं गवांगणम् ॥ ८
कालिंदीजलसंसर्गिशीतलानिलकम्पिते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९
रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ।
कल्पपादपमध्यस्थं हेममण्डपिकागतम् ॥ १०

वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ।
गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥ ११ ॥
सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ।
खण्डिताखण्डलोन्मुक्तमुक्तासारघनौघहम् ॥ १२
वेणुवादमहोल्लासकृतहुंकारनिःस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥ १३
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्त्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥ १४
नारदाद्यैर्मुनिवरैर्वेदवेदांगपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् । १५
य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।
त्रिसंध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् १६
राजवल्लभतामेति भवेत्सर्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् १७

इति श्रीगोपालचूडामणिस्तवराजः समाप्तः ।

---

## ॥ श्रीराधास्तोत्र प्रारम्भः ॥

श्रीनारद उवाच ॥

किंचिद्गुह्यतरं ब्रह्मन् यच्चिन्त्यमखिलेश्वरे ।
तन्मे ब्रूहि सुतस्नद्य योगेश मयि वत्सलः ॥ १ ॥

श्रीब्रह्मोवाच ।

शृणु गुह्यं तु मे तात नारायणमुखाच्छ्रुतम् ।
सर्वदा पूज्यते देवै राधा वृन्दावने वने ॥ २ ॥
राधाविश्लेषितः कृष्णो ह्येकदा प्रेमविह्वलः ।
राधामन्त्रं जपन् ध्यायन् राधां पश्यति सर्वतः ॥
ॐ अस्य श्रीराधास्तोत्रमन्त्रस्य ब्रह्मा ऋषिः
अनुष्टुप्छन्दः श्रीराधा देवता ह्रीं वीजं ह्रीं
शक्तिः श्रीराधाप्रीत्यर्थे जपे विनियोगः ।
गृहे राधा वने राधा राधा पृष्ठे पुरः स्थिता ।
यत्र यत्र स्थिता राधा राधैवाराध्यते मया ॥ १
जिह्वा राधा श्रुतौ राधा राधा नेत्रे हृदि स्थिता ।
सर्वाङ्गव्यापिनी राधा राधैवारा० ॥ २ ॥
पूजा राधा जपो राधा राधिकाचाभिवन्दने ।
स्मृतौ राधा शिरो राधा राधैवारा० ॥ ३ ॥
गाने राधा गुणे राधा राधिका भोजने गतौ ।
रात्रौ राधा दिवा राधा राधैवारा० ॥ ४ ॥
माधुर्ये मधुरा राधा महत्त्वे राधिका गुरुः ।
सौंदर्ये सुन्दरी राधा राधैवारा० ॥ ५ ॥
राधा रससुधासिन्धू राधा सौभाग्यमंजरी ।
राधा व्रजाङ्गनामुख्या राधैवारा० ॥ ६ ॥
राधापद्मानना पद्मा पद्मोद्भवसुपूजिता ॥

पद्मे विवेचिता राधा राधेवारा० ॥ ७ ॥
राधाकृष्णात्मिकानित्यं कृष्णोराधात्मकोध्रुवम्
वृन्दावनेश्वरी राधा राधैवारा० ॥ ८ ॥
जिह्वाग्रे राधिकानाम नेत्राग्रे राधिकातनुः ।
कर्णे च राधिकाकीर्त्तिर्मानसे राधिका सदा ॥ ९
कृष्णेन पठितं स्तोत्रं राधिकाप्रीतये परम् ।
यः पठेत्प्रयतोनित्यं राधाकृष्णान्तिकेभवेत् १०
आराधितमना कृष्णो राधाराधितमानसः ।
कृष्णःकृष्णमना राधा राधाकृष्णेति यः पठेत् ११

इति श्रीमद्ब्रह्माण्डपुराणे ब्रह्मनारदसम्वादे राधास्तोत्रं सम्पूर्णम् ।

---

## ॥ श्रीगोविन्दाष्टकम् ॥

सत्यं ज्ञानमनंतं नित्यमनाकाशं परमाकाशम् ।
गोष्ठप्राङ्गणरिंगणलोलमनायासं परमायासम् ॥
मायाकल्पितनानाकारमनाकारं भुवनाकारम् ।
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम्
मृत्स्नामत्सीहेतियशोदाताडनशैशवसंत्रासम् ।
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालि
लोकत्रयपुरमूलस्तंभं लोकालोकमनालोके ।
लोकेशं परमेशंप्रणमत गोविन्दं परमानन्दम् ॥ २

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नम् ।
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्ति विशेषाभासमनाभासम् ।
शैवं केवलशान्तं प्रणमत० ॥ ३ ॥
गोपालंभूलीलाविग्रहगोपालं गोकुलपालम् ।
गोपीखेलनगोवर्द्धनधृतिलीलालालितगोपालम् ॥
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानम्
गोपीगोचरदूरं प्रणमत गोविन्दं० ॥ ४ ॥
गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं ।
शश्वद्गोखुरनिर्द्धूतोत्कृतधूलीधूसरसौभाग्यम् ॥
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं ।
चिन्तामणिमहिमानं प्रणमत गो० ॥ ५ ॥
स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं ।
व्यादित्सन्तीरथ दिग्वस्त्राद्युपदातुमुपाकर्षंतं ॥
निर्द्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्थम् ।
सत्तामात्रशरीरं प्रणमत गो० ॥ ६ ॥
कांतंकारणकारणमादिमनादिं कालमनाभासं ।
कालिन्दीह्रदकालियशिरसिसुनृत्यंतंबहुनृत्यंतम्
कालंकालकलातीतं कलिताशेषंकलिदोषघ्नम् ।
कालत्रयगतिहेतुं प्रणमत गो० ॥ ७ ॥

वृन्दावनभुवि वृन्दारकवरवृन्दाराधित वन्देऽहं ।
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् ॥
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं ।
वन्द्याशेषगुणाब्धिं प्रणमत गो० ॥ ८ ॥
गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो ।
गोविन्दाच्युतमाधवविष्णोगोकुलनायककृष्णेति
गोविन्दांघ्रिसरोजध्यानसुधाजलधौतसमस्ताघो
गोविन्दं परमानन्दामृतमन्तस्थं स समभ्येति ॥ ९

इति श्रीशङ्कराचार्यकृतं श्रीगोविन्दाष्टकं समाप्तम् ।

---

## ॥ श्रीगोपालाष्टकम् ॥

विहरत स्वच्छन्दं आनँदकन्दं
श्रीव्रजचन्दं ब्रह्म परम् ।
पूरणशशिवदनं शोभासदनं
जितछविमदनं रूपवरम् ॥
हलधरवरवीरं श्यामशरीरं
गुणगम्भीरं धीरधरम् ।
भज श्रीगोपालं दीनदयालं
वचनरसालं तापहरम् ॥ १ ॥
राजत वनमाला रूपविशाला
चालमराला सुरतहरम् ।

कुण्डलधृतकरणं गिरिवरधरणं
निजजनशरणं कृपाकरम् ॥
गोपन कृतसङ्गं ललितत्रिभङ्गं
लजितअनङ्गं निरखि परम् । भज० २ ॥
जलधरवरश्यामं पूरणकामं
अतिसुखधामं दुःखहरम् ।
वृन्दावनक्रीडित असुरन पीडित-
ब्रजतियव्रीडित रसिकवरम् ॥
नूपुरध्वनिचरणं मुनिमनहरणं ।
तारं तरणं तुष्टतरम् । भज० ३ ॥
राधाउरहारं रूपअपारं
नीरविहारं चीरहरम् ।
कुंचितवरकेशं मुकुटविशेषं
गोपसुवेशं निगमवरम् ॥
कोमलअतिचरणं वेदविवरणं
जगदुद्धरणं मृदुलतरम् । भज० ४ ॥
अलकन मुख राजत मन्मथ लाजत
किंकिणि बाजत मधुरस्वरम् ।
वंशीकृतनादं हरत विषादं
युगवरपादं तिमिरहरम् ।

अलकन आर्यीनं चरितनवीनम्
परमप्रवीणं प्रेमपरम् । भज० ५ ॥
अतिनृत्यप्रवीरे धीरसमीरे-
यमुनातीरे रासकरम् ।
कलगान अनूपं श्यामस्वरूपं
त्रिभुवनभूपं मोदभरम् ॥
राधागुणगायक-व्रजसुखदायक
सुरवरनायक-वेणुधरम् । भज० ६ ॥
सुन्दरमृदुहासं विपिनविलासं
कुंजनिवासं केलिकरम् ।
युवतीदृगअञ्जन जन मन रञ्जन
केशियभञ्जन भारहरम् ॥
भूषणनिजभवनं गजगतिगमनं
कालियदमनं नृत्यकरम् । भज० ७ ॥
गोरजमुखशोभित सुरनरलोभित
मन्मथक्षोभित हृदयपरम् ।
गोपनसहभुञ्जे विपिननिकुञ्जे-
वत्सन पुञ्जे दुहिणहरम् ॥
यह छवि सारयण लखि नारायण
भयपारायणअखिलनरम् । भज० ८ ॥

---

## ॥ श्रीराधास्तोत्रम् ॥

॥ दोहा ॥

पराभक्तिरतिवर्द्धिनी, श्यामा सब सुख दैन ।
रसिकमुकुटमणि राधिके, जय नवनीरजनैन ॥ १

( तालचम्पक० )

जयति जय राधा रसिकमनि
मुकुटमनिहरमी प्रिये !
पराभक्तिप्रदायिनी करि
कृपा करुणानिधि प्रिये ! परा० १ ॥
जयति गौरी नवकिशोरी
सकल-सुख-सीमा प्रिये ! परा० २ ॥
जयति रतिरसवर्द्धिनी
अतिअद्भुता सदया हिये । परा० ३ ॥
जयति आनँदकन्दिनी
जगवन्दनीवरवदनिये । परा० ४ ॥
जयति श्यामा अमितनामा
वेदविधिनिर्वाचिये ! परा० ५ ॥
जयति रासविलासिनी
कलकलाकोटिप्रकाशिये । परा० ६ ॥
जयति विविधविहारकवनी-

रसिकरवनी शुभधिये । परा० ७ ॥
जयति चंचलचारुलोचन
दिव्यदुकुलाभरनिये ! परा० ८ ॥
जयति परमा प्रेमसीमा
कोकिलाकलबैनिये । परा० ९ ॥
जयति कञ्चनदिव्यअङ्गी
नवलनीरज नैनिये । परा० १० ॥
जयति वल्लभवल्लभा
आनन्दकलभातरुनिये । परा० ११ ॥
जयति रावलपतिकुमारी
नन्दबालवधूटिये । परा० १२ ॥
जयति नागरगुण उजागर
प्रानधनमन हरनिये । परा० १३ ॥
जयति नूतननित्यलीला
नित्यधामनिवासिये । परा० १४ ॥
जयति गुणमाधुर्यभूपा
सिद्धिरूपा शक्तिये परा० १५ ॥
जयति शुद्धस्वभावशीला
श्यामला सुकुमारिये । परा० १६ ॥
जयति यशजगप्रचुरपरिकर

श्रीहरिप्रिया जीवनजिये । परा० १७ ॥

इति श्रीतालचम्पक राधास्तोत्रं सम्पूर्णम् ।

---

## ॥ श्री राधा-कृष्ण स्तोत्रम् ॥

जय राधे जय राधे राधे

जय राधे जय श्रीराधे ।

जय कृष्ण जय कृष्ण कृष्ण

जय कृष्ण जय श्रीकृष्ण ॥ १ ॥

श्यामा गोरी नित्यकिशोरी

प्रीतमजोरी श्रीराधे ।

रसिकरँगीली छैलछबीली

गुनगरबीली श्रीकृष्ण ॥ २ ॥

रासविहारिनि रसविस्तारिनि

पियउरधारिनि श्रीराधे ।

नवनवरङ्गी नवलत्रिभङ्गी

श्यामसुअङ्गी श्रीकृष्ण ॥ ३ ॥

प्राणपियारी रूपउजारी

अतिसुकुमारी श्रीराधे ।

मैनमनोहर महामोदकर

सुन्दरवरतर श्रीकृष्ण ॥ ४ ॥

शोभाश्रैनी मोहाश्रैनी

कोकिलबैनी श्रीराधे ।

कीरतिवंता कामिनिकंता

श्रीभगवन्ता श्रीकृष्ण ॥ ५ ॥

चन्द्रावदनी कुन्दारदनी

शोभासदनी श्रीराधे ।

परम उदारा प्रभाअपारा

अतिसुकुमारा श्रीकृष्ण ॥ ६ ॥

हंसागवनी राजतरवनी

क्रीडाकवनी श्रीराधे ।

रूप रसाला नयन विशाला

परम कृपाला श्रीकृष्ण ॥ ७ ॥

कञ्चनवेली रतिरसवेली-

अतिअलवेली श्रीराधे ॥ ८ ॥

सब सुख सागर सब गुन आगर

रूपउजागर श्रीकृष्ण ॥ ८ ॥

रमणीरम्या तरुतरतम्या

सुगुणअगम्या श्रीराधे ।

धामनिवासी प्रभाप्रकासी-

सहजसुहासी श्रीकृष्ण ॥ ९ ॥

शक्त्याह्लादिनि अतिप्रियवादिनि
उरउन्मादिनि श्रीराधे ।
अँग अँग टौना सरस सलौना
सुभग सुठौना श्रीकृष्ण ॥ १० ॥
राधानामनि गुणअभिरामिनि
श्रीहरिस्वामिनि श्रीराधे ।
हरे हरे हरि हरे हरे हरि
हरे हरे हरि श्रीकृष्ण ॥ ११ ॥

इति श्रीयुगलस्तोत्र सम्पूर्णम् ।

---

## ॥ श्रीनन्दनन्दनस्तोत्रम् ॥

श्रीमुनिरुवाच ।

बालं नवीनशतपत्रविशालनेत्रं
बिम्बाधरं सजलमेघरुचिं मनोज्ञम् ।
मन्दस्मितं मधुरसुंदरमंदयानं
श्रीनन्दनन्दनमहं मनसा नमामि ॥ १ ॥
मंजीरनूपुररणन्नवरत्नकांची-
श्रीहारकेसरिनखप्रतियन्त्रसङ्घम् ।
दृष्टार्तिहारिमषिबिंदुबिराजमानं
वन्दे कलिंदतनुजातटबालकेलिम् ॥ २ ॥

पूर्णेन्दुसुन्दरमुखोपरि कुंचिताग्राः
केशा नवीनघननीलविभाः स्फुरंतः ।
राजंत आनतशिरःकुमुदस्य यस्य
नन्दात्मजाय सबलाय नमो नमस्ते ॥ ३८ ॥
श्रीनन्दनन्दनस्तोत्रं प्रातरुत्थाय यः पठेत् ।
तन्नेत्रगोचरं याति सानन्दं नन्दनन्दनः ॥ ४ ॥

इति गर्गसंहितोक्त नन्दनन्दनस्तोत्रम् ।

---

## (उध्दवद्वारा प्रेषितं श्रीपत्रम्)

श्रीभगवानुवाच ।

गच्छ शीघ्रं व्रजं हेसखे सुन्दरं
श्रीलताकुंजपुंजादिभिर्मण्डितम् ।
शैलकृष्णप्रभाचारुवृन्दावनं
गोपगोपीगणैर्गोकुलं संकुलम् ॥ १ ॥
एकपत्रं तु नन्दाय वै दीयतां
वा द्वितीयं यशोदाकरे एव भोः ।
वा तृतीयं त्विदं राधिकायै सखे
तत्र गत्वा हि तन्मंदिरं सुन्दरम् ॥ २ ॥
वा चतुर्थं सखिभ्यः शिशुभ्यः शुभं
कौशलं दीयतां पत्रमेवं पृथक् ।

गोपिकानां शतेभ्यश्च यूथेभ्य उ-
न्मोहितानां च देयानि पत्राणि च ॥ ३ ॥
मे पिता नन्दराजो घृणी मन्मना
मे च माता यशोदा स्मरत्याशु माम् ।
वाक्यवृन्दैः शुभैर्नीतिवित्त्वं तयो-
र्मे परां प्रीतिमाराद्द्वयोरावह ॥ ४ ॥
मत्प्रिया राधिका मद्वियोगातुरा
मन्यते मां विना खं जगन्मोहतः ।
मद्वियोगाधिमासां मदुक्तैः पदै-
र्मोचय त्वं भवान्दक्षिणो वाक्पथे ॥ ५ ॥
गोपबालाः सुदामादयो मत्प्रिया
मां सखायं विना ते पि मोहातुराः ।
देहि तेषां सुखं मित्रवच्छ्रीव्रजे
स्वल्पकालेन तत्रागमिष्याम्यहम् ॥ ६ ॥
गोपिका मद्वियोगाधिवेगातुरा
मन्मनस्काश्च मत्प्राप्तदेहासवः ।
या मदर्थे च संत्यक्तलोकाबला-
स्ताः कथं नात्र मंत्रिन् बिभर्मि स्वतः ॥ ७
ता असून्त्यक्तुमत्रोद्यता उद्धव
याभिरद्यापि कृच्छ्रैर्धृतास्त्वासवः ।
मद्वियोगाधिमासां मदुक्तैः पदै-

श्रोंचय त्वं भवान् दक्षिणो वाकपथे ॥ ८

येन पूर्व व्रजादागतोऽहं स तं

त्वं रथं साश्वसूतं रणद्घंटिकम् ।

मे च सारूप्यमद्यैव पीताम्बरं

वैजयंतीं सहस्रच्छदं पङ्कजम् ॥ ९ ॥

कुण्डले दिव्यरत्नप्रभामण्डिते

कोटिबालार्कदीप्तं मणिं कौस्तुभम् ।

मे महानादिनीं चारुवंशीं शुभां

पुष्पयुक्तां च यष्टिं जगन्मोहिनीम् ॥ १०

चंदनं सुंदरं दिव्यगंधावृतं

बर्हमल्लादिवेषं क्वणन्नूपुरम् ।

मौलिमेवं गृहाणांगदे उद्धव

गच्छ गच्छाशु चाद्यैव मद्वाक्यतः ॥ ११ ॥

इति श्रीपत्रं सम्पूर्णम् ।

---

## * श्रीयुगलस्तोत्रम् *

उद्धव उवाच ।

सदास्ति कृष्णः परिपूर्णदेवो

राधे सदा त्वं परिपूर्णदेवी ।

श्रीकृष्णचन्द्रः कृतनित्यलीलो

लीलावती त्वं कृतनित्यलीला ॥ १ ॥
कृष्णोऽस्ति भूमा त्वमसीन्दिरा सदा
ब्रह्मास्ति कृष्णस्त्वमसि स्वरा सदा ।
कृष्णः शिवस्त्वं च शिवा शिवार्थी
विष्णुः प्रभुस्त्वं किल वैष्णवी परा ॥ २ ॥
कौमारसर्गी हरिरादिदेवता
त्वमेव हि ज्ञानमयी स्मृतिः शुभा ।
छयांभसा क्रीडनतत्परो हरि-
र्यज्ञो वराहो वसुधा त्वमेव हि ॥ ३ ॥
देवर्षिवर्यो मनसा हरिः स्वयं
त्वं तत्र साक्षान्निजहस्तवल्लकी ।
नारायणो धर्मसुतो नरेण हि
शांतिस्तदा त्वं जनशांतिकारिणी ॥ ४ ॥
कृष्णस्तु साक्षात्कपिलो महाप्रभुः
सिद्धिस्त्वमेवासि च सिद्धसेविता ।
दत्तस्तु कृष्णोऽस्ति महामुनीश्वरो
राधे सदा ज्ञानमयी त्वमेव हि ॥ ५ ॥
यज्ञो हरिस्त्वं किल दक्षिणा हरि-
रुरुक्रमस्त्वं हि सदा जयन्त्यतः ।
पृथुर्यदा सर्वनृपेश्वरो हरि-
रर्चिस्तदा त्वं नृपपट्टकामिनी ॥ ६ ॥

यद्धासुरं हंतुमभूद्धरिर्यदा
    मत्स्यावतारस्त्वमसि श्रुतिस्तदा ।
कूर्मो हरिर्मंदरसिन्धुमंथने
    नेत्रीकृता त्वं शुभदा हि वासुकी ॥ ७ ॥
धन्वंतरिश्चार्तिहरो हरिः पर-
    स्त्वमौषधिर्दिव्यसुधामयी शुभे ।
श्रीकृष्णचन्द्रस्तु बभूव मोहिनी
    त्वं मोहिनी तत्र जगद्विमोहिनी ॥ ८ ॥
हरिर्नृसिंहस्तु नृसिंहलीलया
    लीला तदा त्वं निजभक्तवत्सला ।
बभूव कृष्णस्तु यदा हि वामनः
    कीर्तिस्तदा त्वं निजलोककीर्तिता ॥ ९ ॥
हरिर्यदा भार्गवरूपधृक्पुमान्
    धारा कुठारस्य तदा त्वमेव हि ।
श्रीकृष्णचन्द्रो रघुवंशचन्द्रमा
    यदा तदा त्वं जनकस्य नन्दिनी ॥ १० ॥
श्रीशौर्द्रष्टा मुनिबादरायणो
    वेदान्तकृत्त्वं किल वेदलक्षणा ।
सङ्कर्षणो माधव एव वृष्णिषु
    त्वं रेवती ब्रह्मसुता समाश्रिता ॥ ११ ॥
बुद्धो यदा क्षोणिपमोहकारको

बुद्धिस्तदा त्वं जनमोहकारिणी ।
कल्की यदा धर्मपतिर्भविष्यति
हरिस्तदा त्वं तु कृतिर्भविष्यसि ॥ १२ ॥
श्रीकृष्णचन्द्रोऽस्ति हि चन्द्रमण्डले
राधे सदा चन्द्रमुखीति चन्द्रिका ।
श्रीकृष्णसूर्यो दिवि सूर्यमण्डले
सूर्यप्रभा त्वं परिधिः प्रतिष्ठिता ॥ १४ ॥
इन्द्रो यदा स्ते किल यादवेन्द्र-
स्तत्रैव राधे तु शची शचीश्वरी
हिरण्यरेता हि हरिः परेश्वरी
हेलिस्तदा त्वं हि हिरण्मयी परा ॥ १४ ॥
श्रीराजराजो हि विराजते हरि-
र्विराजसे त्वं तु निधी निधीश्वरी ।
क्षीराब्धिरूपी तु हरिस्त्वमेव हि
तरङ्गितक्षोभसिता तरंगिणी ॥ १५ ॥
बिभ्रद्वपुः सर्वपतिर्यदा यदा
तदा सदा त्वं विदितानुरूपिणी ।
जगन्मयो ब्रह्ममयो हरिः स्वयं
जगन्मयी ब्रह्ममयी त्वमेव हि ॥ १६ ॥
अद्यैव सोऽयं व्रजराजनन्दनो
जातासि राधे वृषभानुनन्दिनी ।

याभ्यां कृता सत्त्वमयी प्रशांतये
लीलाचरित्रैर्ललितादिलीलया ॥ १७ ॥
कृष्णः स्वयं ब्रह्म परं पुराणो
लीला त्वदिच्छाप्रकृतिस्त्वमेव ।
परस्परं संधितविग्रहाभ्यां
नमो युवाभ्यां हरिराधिकाभ्याम् ॥ १८ ॥

इति गर्गसंहितके श्रीयुगलस्तोत्रम् ।

---

## * श्रीराधाप्रबोधाय वेणुगीतम् *

चन्द्राननोवाच ।

कृष्णचन्द्रः पुरा निर्गतो मानतो
ह्यागतः सोऽपि राधे युगांते पुनः ।
नाशयन्सर्वदुःखानि ते सन्निधौ
संजगौ वेणुना देवकीनन्दनः ॥ १ ॥
धुंगधुंगे निनादं मृदंगे कलं
वाद्यमाने सुरस्त्रीजनैः सेवितः ।
रासरम्यांगणे नृत्यकृन्माधवः
संजगौ वेणुना देवकीनन्दनः ॥ २ ॥
चारुचामीकराभासिवासा विभु-
र्वैजयंतीभराभासितोरस्थलः ।

नन्दवृन्दावने गोपिकामध्यगः
संजगौ वेणुना देवकीनन्दनः ॥ ३ ॥
चारुचन्द्रावलीलोचनाचुंबितो
गोपगोवृन्दगोपालिकावल्लभः ।
कंसवंशाटवीदाहदावानलः
संजगौ वेणुना देवकीनन्दनः ॥ ४ ॥
बालिकातालिकाताललीलालया
संगसंदर्शितभ्रूलताविभ्रमः ।
गोपिकागीतदत्तावधानः स्वयं
संजगौ वेणुना देवकीनन्दनः ।। ५ ॥
मौलिमालांगदैः किंकिणीकुण्डलै-
र्भूषितो नन्दनो नन्दराजस्य च ।
प्रीतिकृत्सुन्दरो देवि प्रीत्या तव
संजगौ वेणुना देवकीनन्दनः ॥ ६ ॥
पारिजातं समुद्धृत्य राधावरो
रोपयामास भामाभयादंगणे ।
वल्लवीवृन्दवन्दारिकाकामुकः
संजगौ वेणुना देवकीनन्दनः ॥ ७ ॥
ऋक्षराजं विनिर्जित्य नीत्वा मणिं
संददौ भीतवद्भूमिनाथाय च ।
सोऽपि रासे समागत्य रासेश्वरो

संजगौ वेणुना देवकीनन्दनः ॥ ८ ॥

इति गर्गसंहितोक्तं वेणुगीतम् ।

---

## ॥ श्रीगिरिधरस्तोत्रम् ॥

इन्द्र उवाच ।

त्वं देवदेवः परमेश्वरः प्रभुः
पूर्णः पुराणः पुरुषोत्तमोत्तमः ।
परात्परस्त्वं प्रकृतेः परो हरि-
र्मां पाहि पाहि द्युपते जगत्पते ॥ १ ॥
दशावतारो भगवांस्त्वमेव
रिरक्षया धर्मगवां श्रुतेश्च ।
अद्यैव जातः परिपूर्णदेवो
कंसादिदैत्येन्द्रविनाशनाय ॥ २० ॥
त्वन्मायया मोहितचित्तवृत्ति
मदोद्धतं हेलनभाजनं माम् ।
पितेव पुत्रं द्युपते क्षमस्व
प्रसीद देवेश जगन्निवास ॥ ११ ॥

ॐ नमो गोवर्द्धनोद्धरणाय गोकुलनिवासाय गोपालाय गोपालपतये गोपीजनभर्त्रे गिरिराजोद्धर्त्रे करुणानिधये जगन्मङ्गलाय जगन्निवासा

जगन्मोहनाय कोटिमन्मथमन्मथाय वृषभानु-सुताश्वराय श्रीनंदराजकुलप्रदीपाय श्रीकृष्णाय परिपूर्णतमाय त्वसंख्यब्रह्माण्डपतये गोलोकधामधिषणाधिपतये स्वयम्भगवते सबलाय नमस्ते नमस्ते नमस्ते ।

---

## ॥ श्रीगोपीगीतम् ॥

गोप्य ऊचुः ।

अधरबिंबविडंबितविद्रुमं
मधुरवेणुनिनादविनोदिनम् ।
कमलकोमलनीलमुखांबुजं
तमपि गोपकुमारमुपास्महे ॥ १ ॥
श्यामलं विविधकेलिलंपटं
कोमलं कमलपत्रलोचनम् ।
कोमदं व्रजविलासिनीदृशां
शीतलं मतिहरं भजामहे ॥ २ ॥
तं विसंचलितलोचनांचलं
सस्मितकुड्मलितकोमलाधरम् ।
वंशवलिगतकरांगुलीमुखं

वेणुनादरसिकं भजामहे ॥ ३ ॥
ईषदंकुरितदंतकुंडलै-
र्भूषणैर्भुवनमंगलश्रियम् ॥ ४ ॥
घोषसौरभमनोहरं हरे-
र्वेषमेव मगयामहे वयम् ॥ ४ ॥
अस्तु नित्यमरविन्दलोचनः
श्रेयसे हि तु सुरार्चिताकृतिः ।
यस्य पादसरसीरुहामृतं
सेव्यमानमनिशं मुनीश्वरैः ॥ ५ ॥
गोपकैरचितकल्लसंगरं
संगरे जितविदग्धयौवनम् ।
चिन्तयामि मनसा सदैव तं
दैवतं निखिलयोगिनामपि ॥ ६ ॥
उल्लसन्नवपयोदमेव यं
फुल्लतामरसलोचनांचलम्
वल्लवीहृदयपश्यतोहरं
पल्लवाधरमुपास्महे वयम् ॥ ७ ॥
यद्धनंजयरथस्य मंडनं
खंडनं तदपि संश्रितैनसाम् ।
जीवनं श्रुतिगिरां सदामलं

श्यामलं मनसि मेऽस्तु तन्महः ॥ ८ ॥

गोपिकास्तनविलोललोचन-
प्रांतलोचनपरं परावृतम् ।
बालकेलिरसलोलसंभ्रमं
माधवं तमनिशं विभावये ॥ ९ ॥

नीलकण्ठकृतपिच्छशेखरं
नीलमेघतुलितांगवैभवम् ।
नीलपङ्कजपलाशलोचनं
नीलकुंतलधरं भजामहे ॥ १० ॥

घोषयोषिदनुगीतवैभवं
कोमलस्वरितवेणुनिस्वनं ।
सारभूतमभिरामसंपदं
धाम तामरसलोचनं भजे ॥ ११ ॥

मोहनं मनसि शार्ङ्गिणं परं
निर्गतं किल विहाय मानिनी ।
नारदादिमुनिभिश्च सेवितं
नंदगोपतनयं भजामहे ॥ १२ ॥

श्रीहरिस्तु रमणीभिरावृतो
यस्तु वै जयति रासमंडले ।
राधया सह वने च दुःखिता-
स्तं प्रियं हि मृगयामहे वयम् ॥ १३ ॥

देवदेव व्रजराजनंदन
देहि दर्शनमलं च नो हरे।
सर्वदुःखहरणं च पूर्ववत्
संनिरीक्ष्य तव शुक्लदासिकाः ॥ १४ ॥
क्षितितलोद्धरणाय दधार यः
सकलयज्ञवराहवपुः परम्।
दितिसुतं विददार च दंष्ट्रया
स तु सदोद्धरणाय क्षमोऽस्तु नः ॥ १५ ॥
मनुमपाद्द्विजो द्विजैः सह
वसु दुदोह धरामपि यः पृथुः।
श्रुतिमपाद् धृतमत्स्यवपुः परं
स शरणं किल नोऽस्त्वशुभक्षयो ॥ १६ ॥
अवहदब्धिमहो गिरिमूर्जितं
कमठरूपधरः परमस्तु यः।
असुहरं नृहरिः समदण्डय-
त्स च हरिः परमं शरणं च नः ॥ १७ ॥
नृपबलिं छलयन् दलयन्नरी-
न्मुनिजनाननुगृह्य चचार यः।
कुरुपुरं च हलेन विकर्षयन्
यदुवरःस गतिर्मम सर्वथा ॥ १८ ॥
व्रजपशून् गिरिराजमथोद्धरन्

व्रजपगोपजनं च जुगोप यः ।
द्रुपदराजसुतां कुरुकश्मला-
द्भवतु तच्चरणाब्जरतिश्च नः ॥ १९ ॥
विषमहाग्निमहास्त्रविपद्गणात्
सकलपांडुसुताः परिरक्षिताः ।
यदुवरेण परेण च येन वै
भवतु तच्चरणं शरणं च नः ॥ २० ॥
माला बर्हिमनोज्ञकुंतलभरां वन्यप्रसूनोक्षितां
शैलेयागुरुक्लृप्तचित्रतिलकां शश्वन्मनोहारिणीम्
लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं
बालां बालतमालनीलवपुषं वन्दामहे देवताम् २१

इति श्रीमद्दुर्गाचार्य सं० गोपीगीतम् ।

---

## ॥ श्रीगोपीगीतम् ॥

लोकाभिराम जनभूषण विश्वदीप
कन्दर्पमोहनजगद्वृजिनार्तिहारिन् ।
आनन्दकन्द यदुनन्दन नन्दसूनो
स्वच्छन्दपद्ममकरन्द नमो नमस्ते ॥ १
गोविप्रसाधुविजयध्वज देववन्द्य
कंसादिदैत्यवधहेतुकृतावतार ।
श्रीनन्दराज कुलपद्मदिनेश देव

देवादिमुक्तजनदर्पण ते जयोऽस्तु ॥ २

गोपाल सिन्धुपरमौक्तिकरूपधारिन्

गोपालवंशगिरिनीलमणे परात्मन्

गोपालमण्डलसरोवरकंजमूर्ते

गोपालचन्दनवने कलहंसमुख्य ॥ ३

श्रीराधिकावदनपङ्कजषट्पदस्त्वं

श्रीराधिकावदनचन्द्रचकोररूपः ।

श्रीराधिकाहृदयसुन्दरचन्द्रहारः

श्रीराधिकामधुलताकुसुमाकरोऽसि ॥ ४

यो रासरंगनिजवैभवभूरिलोलो

यो गोपिकानयनजीवनमूलरूपः ।

मानं चकार रहसी (सि) किल मानवत्यां

सोऽयं हरिर्भवतु नो नयनाग्रगामी ॥ ५

यो गोपिकासकलयूथमलंचकार

वृन्दावनं च निजपादरजोभिरद्रिम् ।

यः सर्वलोकविभवाय बभूव भूमौ

तं भूरिलीलमुरगेन्द्रभुजं भजामः ॥ ६

चन्द्रं प्रतप्तकिरणं ज्वलनं प्रसादं

सर्वं वनान्तमसिपत्रवनं परेश

प्राणं प्रभंजनमतीव सुमन्दयानं

मन्यामहे किल भवन्तमुते व्यथार्ताः ॥

इति श्रीमदुग्रणाचार्य संहितायां वृन्दावनखण्डे
श्रीकृष्णागमाय गोपीगीतं सम्पूर्णम् ।

---

## षट्पदीस्तोत्रम् ।

अविनयमपनय विष्णो
दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदया विस्तारय
तारय संसारसागरतः ॥ १ ॥
दिव्यधुनीमकरंदे
परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे
भवभयखेदच्छिदे वन्दे ॥ २ ॥
सत्यपि भेदापगमे
नाथ तवाहं न मामकीनस्त्वम
सामुद्रो हि तरंगः क्वचन
समुद्रो न तारंगः ॥ ३ ॥
उद्धृतनग नगभिदनुज
दनुजकुलामित्र मित्रशशिदृष्टे ।
दृष्टे भवति प्रभवति
न भवति किं भवतिरस्कारः ॥ ४ ॥

मत्स्यादिभिरवतारै-
रवतारवताऽवता वसुधाम् ।
परमेश्वर परिपाल्यो
भवता भवतापभीतोऽहम् ॥ ५ ॥

दामोदर गुणमन्दिर
सुन्दरवदनारविन्द गोविन्द ।
भवजलधिमथनमन्दर
परमं दूरमपनय त्वं मे ॥ ६ ॥

नारायण करुणामय
शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये
वदनसरोजे सदा वसतु ॥ ७ ॥

इति श्रीविष्णोः शङ्कराचार्यकृतं षट्पदीस्तोत्रम् ।

---

## श्रीराधाकृष्ण-नाम-महिमा ।

ककारोच्चारणाद्भक्तः कैवल्यं मृत्युजन्महम् । ऋकाराद्दास्यमतुलं षकाराद्भक्तिमीप्सिताम् ॥ १ ॥ नकारात्सहवासं च तत्समं कालमेव च । कृष्णेति सुन्दरं नाम सर्ववस्तुप्रदायकम् ॥ २ ॥ रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे । सर्वेप्सितं सदानन्दं सर्वसिद्ध्योघमीश्वरम् ॥ ३ ॥ धकारः सहवासं च तत्तुल्य कालमेव च । ददाति सार्ष्टिं सामीप्यं तत्त्वज्ञानं हरेः समम् ॥ ४ ॥ आकारस्तेजसां राशिं दानशक्तिं हरेर्यथा । श्रवणस्मरणोक्तिभ्यः प्रणश्यति पराशुभम् । रा शब्दं कुर्वतः पश्चाद्यामि श्रवणलोलुपः ॥ ६ ॥ राधाकृष्णेति हे गोपा ये जपन्ति पुनः पुनः । चतुः पदार्थाः किं तेषां साक्षात् कृष्णोऽपि लभ्यते ॥ ७ ॥

---

# भाषा स्तोत्रादि।

### कवित्त।

मूरतिको भेद अरु सूरतिको भेद नहिं मोहनसों भेद मत बेदनके ग्रामको। नेह परिपूर वृषभान नन्दिनीको नूर देखि जात रूपको गरूर कामबामको॥ आनन अनूप पारिजातको है भूप किधौं भासै न समान उपमान सुधाधामको। करुणा अगाधा हरै सन्तनकी बाधा ऐसो कहैं विन राधा फल आधा कृष्ण नामको॥ १॥

### कवित्त।

आनँद के कँद ब्रज चंद नंद के कुमार मारतं अपार छवि देखि सुख लहुरे। भनत गनेश गिरिराज के धरैया देव कारज करैया के ढिग जाय क्यों न रहुरे। गोजन के पालन करैया निज भक्तनके मानके रखैया कान्ह जूके पद गहुरे। एरे मन! मूढ तोहि विनवतहूं! बार बार राधा कृष्ण राधा कृष्ण राधा कृष्ण कहुरे॥

### * छप्पय *

जय जय नन्द किशोर जयति वृषभानु किशोरी
चिदानन्द घनरूप नित्य सुन्दर वर जोरी।
लीला धाम स्वरूप नाम नित भक्त जो गावैं

नेति नेति कहि वेद भेद जाको नहिं पावैं ॥
गौर श्याम शोभा सदन प्रणत पाल आरति हरण
जन कल्याण के कल्पतरु सर्व काम पूरण करण ।

## श्रीनन्दकुमाराष्टक ।

सुन्दर गोपालं उर वनमालं नयन रसालं दुःखहरं ।
वृन्दावन चंदं आनँदकन्दं परमानंदं धरणि-धरं ।
वल्लभ घनश्यामं पूरणकामं अति अभिरामं प्रीतिकरं ।
भजनंदकुमारं सब सुख सारं तत्व विचारं ब्रह्म परं ।
भज० १ ॥
वारिज वदनं निर्जित मदनं आनँद सदनं मुकुटधरं ।
गुञ्जाकृतहारं विपिनविहारं परमोदारं चीरहरं ।
वल्लभ पट पीतं कृत उपवीतं कर नवनीतं विबुधवरं ।
भज० २ ॥
शोभित सुख मूलं यमुनाकूलं निपट अतूलं सुखदवरं ।
सुखमण्डित रेणुं चारित धेनुं वादितवेणुं मधुरस्वरं ॥
वल्लभ अति बिमलं शुभ पदकमलं नखरुचि अमलं तिमिरहरं
भज० ३ ॥
शिर मुकुट सुदेशं कुञ्चितकेशं नटवरवेषं कामवरं ।
मायाकृत मनुजं हलधर अनुजं प्रतिहतदनुजं भारहरं
वल्लभ व्रजपालं सुभग सुचालं हित अनुकालं भाववरं ।
भज ४ ॥
इन्दीवरभासं प्रगट सुरासं कुसुमविकासं वंशिधरं

हतमन्मथमानं रूपनिधानं कृत कलगानं चित्तहरं ॥
वल्लभ मृदुहासं कुञ्जनिवासं विविध विलासं केलिकरं
भज० ५ ॥

रति परम प्रवीनं पालितदीनं भक्ताधीनं कर्मकरं ।
मोहन मतिधीरं अतिबलवीरं हतपरवीरं तरलतरं ।
वल्लभ व्रजरमनं वारिजवदनं जलधरशमनं शैलधरं ।
भज० ६ ॥

जलधर द्युति अंगं ललित त्रिभंगं बहुकृतरंगं रसिकवरं
गोकुल परिवारं मदनाकारं कुञ्जविहारं गूढनरं ।
वल्लभव्रजचन्दं सुभग सुछन्दं कृत आनन्दं भ्रान्तिहरं ७

वंदिय युगचरणं पावन करणं, जगदुद्धरणं विमलतरं
कालियशरगमनं कृतफणिनमनं घातित यवनं मृदुलतरं
वल्लभ द्युतिकरणं निर्भलचरणं अशरणशरणं मुक्तकरं
भज नन्दकुमारं सब सुखसारं तत्त्व विचारं ब्रह्म परं ।

इति श्रीनन्द कुमाराष्टक ।

दोहा—गज तो है तू बावरे, सागर यह संसार ।
ग्राह तेरो परिवार है, ग्रस के कीयो ख्वार ॥
निरबल अब तू चेत उठ, भजलै कृष्ण मुरार ।
ध्यान लगा तू कृष्ण से, हो भव सागर पार ॥
कुटुम्ब दिया और धन दिया, दिया हृदय में ज्ञान ।
अन्त समय यह सम्पदा, देवै नहिं कुछ काम ॥
भजन भक्त ! भगवानको, दया दान सनमान
यह हर दम रक्षा करै, पहुंचावै निज धाम ॥

संसार यह मेरा, मैं ही सबका कर्ता; यह सब जानते हैं
मैं इसमें यही देख रहा हूं मुझे, कौन २ भूले, कौन पहचानते हैं
मैं उसी से खुश होता हूं, जो सबमें मुझे दिखाता है
मैं उसी से मिलता हूं, जो प्रेम से मुझे खैंचता है।

चौथमल गिरदावर।

## "ॐ नमः शिवाय"

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय।
देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥ १ ॥
मातङ्गचर्माम्बरभूषणाय सरत्न-गीर्वाणघनार्चिताय।
त्रैलोक्यनाथाय कृतान्तकाय तस्मै मकाराय नमः शिवाय ॥ २ ॥
शिवामुखाम्भोजविकासनाय दक्षस्य यज्ञध्वनाशनाय।
चन्द्रार्कवैश्वानरलोचनाय तस्मै शकाराय नमः शिवाय ॥ ३ ॥
वशिष्ठकुम्भोद्भवगौतमादि मुनीन्द्रवन्द्याय गिरीश्वराय।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै वकाराय नमः शिवाय ॥ ४ ॥
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय।
शिवाय शुद्धाय निरञ्जनाय तस्मै यकाराय नमः शिवाय ॥ ५ ॥

## ( अद्भुत भजन )

एक समय शिवसे मिलनेको नारायण कैलास पधारे। अस्थायी ॥
अंतरा—नागन रहे बैठे शिव शङ्कर, तड़पि रहे दोइ सर्प विचारे ॥
बिन फ्री फरी कौपीन करधनी ताहिसमें प्रभु आन जुहारे ॥ १ ॥
गरुड़ देख व्याकुल भये दोनों रक्ष पक्ष उन कछु न विचारे।
परवश भाग गये बाँबी में, गौर हँसी मुख अंचल डारे ॥ २ ॥
झँपट लियो बैगंवर शिव ने, सो कहले सब अमृत डारे।
प्रगट सुधारस गयो मुख भीतर, भुज फटकार सिंह भये ठाडे ॥ ३ ॥
नन्दी गण वन भाग गये सब, दूत भूत सब आन विकारे।
देख रचन लागे शिवशङ्कर, आज भये बड़ भाग हमारे ॥ ४ ॥
डाले दियो पीत पट केशव, अचक चले प्रभु ब्रह्मा गण धारे।
तुलसीदास हरिचरनन बलिहारी, को जाने प्रभु चरित तुम्हारे ॥ ५ ॥

इति शुभम्।